॥ श्रीवेङ्कटेशनिध्यानम् ॥

ईशानां जगतोऽस्य वेङ्कटपतेर्विष्णोः परां प्रेयसीं
तद्वक्षस्स्थलनित्यवासरसिकां तत्क्षान्तिसंवर्धिनीम् ।
पद्मालङ्कृतपाणिपल्लवयुगां पद्मासनस्थां श्रियं
वात्सल्यादिगुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम् ॥ १॥

श्रीवेङ्कटेशदयितां श्रियं घटकभावतः ।
समाश्रित्य वृषाद्रीशचरणौ शरणं श्रये ॥ २॥

श्रीमन् शेषगिरीश ते पदयुगे मञ्जीरसंराजिते
सक्तं मानसमस्तु मे तव शुभे जङ्घे सुजान्वञ्चिते ।
रम्भाकान्तिहरोरुकाण्डयुगलीं प्राप्तं कटीं सेवते
काञ्चीनूपुरकिङ्किणीपरिचितां पीताम्बरालङ्कृताम् ॥ ३॥

नाभीपङ्कजतुन्दबन्धनलसद्दिव्योदरापाश्रयं
पद्माकौस्तुभहारमाल्यसुभगां वक्षस्स्थलीं गाहते ।
सर्वाभीष्टवरप्रदानकटिबन्धाब्जाग्र्यचक्रोज्ज्वलैः
हस्तैः श्लिष्टमनल्पभूषणयुतैः कण्ठं समालम्बते ॥ ४॥

मुक्तारत्नविराजिकुण्डललसद्गण्डं सुबिम्बाधरं
नासाशोभि दयार्द्रलोचनयुगं सुभ्रूर्ध्वपुण्ड्रोज्ज्वलम् ।
वक्त्रं रत्नललाटिकापरिलसत्फालं सतृष्णं पिबत्
मौलौ रज्जति माल्यशोभिनि महारत्नाभिषेकोज्ज्वले ॥ ५॥

भूयो वक्त्रमनुप्रसर्पति ततः कण्ठावसक्तं भुजैः
श्लिष्टं वक्षसि पद्मया परिचिते लग्नं पुनर्मध्यमम् ।
कट्यूरुद्वयजानुषु प्रविततं जङ्घावसक्तं पदोः ।
प्राप्तं तिष्टति तत्र गात्रसुषमासक्तं वृषाद्रीश ते ॥ ६॥

॥ इति श्रीवेङ्कटेशनिध्यानम् ॥